[ २३ ]

## बन्धुवधे बलदेवस्य परिदेवनम् ।

सुप्तोऽसौ सुतरामस्तीति बुद्ध्वा तस्थौ क्षणं बलः ।
दृष्ट्वा च मक्षिकाः कृष्णाः कृष्णास्याद्गलमाक्षिकम् ॥ २ ॥
ततोऽज्ञासीन्मृतं बन्धुं बलः सद्योऽथ मूर्छया ।
पपात जगतीपृष्ठे कृत्तमूल इव द्रुमः ॥ ३ ॥
कथंचिल्लब्धसंज्ञः सन् सिंहनादं बलोऽकरोत् ।
विनेशुः श्वापदास्तेन चकम्पे चाखिलं वनम् ॥ ४ ॥
इत्युवाच च येनेह सुप्तस्ते ममानुजः ।
विश्वैकवीरः पापेन निहतः स्वं स शंसतु ॥ ५ ॥
स मे संमुखीभवतु सत्यं हि सुभटो यदि ।
सुप्तमत्तसंभ्रान्तविक्लवेषु हि प्रहरेत कः ? ॥ ६ ॥
इत्युक्त्वैवं शब्दमाक्रोशन् गतो यत्रास तत्क्षणम् ।
अथ कृष्णमुपेत्यायं तमालिङ्ग्य रुरोद सः ॥ ७ ॥
हा भ्रातरवनीवीर ! हा यदुकुलान्वित ! ।
हा कनिष्ठगुणज्येष्ठ ! विश्वजेतः ! क्व तिष्ठसि ? ॥ ८ ॥
विना भवन्तं न स्थातुमीशोऽस्मीति पुराऽवदः ।
वचोऽपि नाधुना दत्से क्व सा प्रीतिर्जनार्दन ! ? ॥ ९ ॥
नापराधं स्मरामि त्वं रुष्ट इव निरीक्ष्यसे ।
किं वा यो मे विपक्षोऽभूत् स ते रोषस्य कारणम् ? ॥ १० ॥

---

१ अग्रतोभवतु । २ गर्भ. । ३ मर्त्यं ।

स्थानेऽसि रुषितो भ्रातस्तथाप्युत्तिष्ठ सम्प्रति ।
गच्छत्यस्तं रवि स्वप्नकालो नैष महात्मनाम् ॥ ११ ॥
एवं च प्रलपन् रामस्तामतीयाय यामिनीम् ।
उत्तिष्ठोत्तिष्ठ हे भ्रात ! प्रातरप्येवमब्रवीत् ॥ १२ ॥
अनुत्तिष्ठन्तमुत्थाय तमथ स्नेहमोहित ।
रामः स्कन्धे समारोप्याभ्राम्यद्गिरिवनादिषु ॥ १३ ॥
कृष्णकायं वहन्नर्चन् पुष्पाद्यैरन्वहं बलः ।
षण्मासानतिचक्राम भ्रा स्नेहविमोहित ॥ १४ ॥
—त्रिषष्टि० प० ८, स० १२, पृ० १५९।

## [ २४ ]
## पुत्रविरहे मरुदेव्या विलापः ।

स्वामिनी मरुदेवाऽपि, भरतायाऽऽशिष ददौ ।
हृद्यमान्ती शुचमिव, गिरमित्युज्जगार च ॥ ४९० ॥
मा त्वा मही प्रजा लक्ष्मी, विहाय तृणवत् तदा ।
एकाकी गतवान् वत्सो, दुर्भरा मरुदेव्यहो ! ॥ ४९१ ॥
सूनोश्चन्द्रातपच्छायमातपत्र क्व मूर्द्धनि ? ।
सर्वाङ्गसन्तापकर, क्वेदानीं तपनातप ? ४९२ ॥
सलीलगतिभिर्यानैर्यान हस्त्यादिभि क्व तत् ? ।
वत्सस्य पादचारित्व, क्वेदानीं पथिकोचितम् ? ॥ ४९३ ॥
क्व तद् वारवधूक्षिप्तचारुचामरवीजनम् ? ।

१ सूर्यस्यातप ।

[ २५ ]

## अजितनाथस्य विरहश्रवणे सगरनृपस्य वचनम् ।

ततः सगरमाहूय, जगाद त्रिजगद्गुरुः ।
गृह्यतां राज्यभारो नः, संसाराद्विरतिर्गतान् ॥ १४२ ॥
इत्युक्तोऽजितनाथेन, स्वामिनोऽश्रूणि पातयन् ।
एकैकबिन्दुवर्षीव, वारिदः सगरोऽब्रवीत् ॥ १४३ ॥
अभक्तिः किं मया देव!, विदधे देवपादयोः ? ।
आत्मनो मा पृथक्कर्तुमद्य येनैवमादिश ॥ १४४ ॥
अभक्तिर्वस्तु विहिता, नाप्रसादाय सापि हि ।
पूज्यैरभक्तोऽपि शिशुः, शिष्यते न तु हीयते ॥ १४५ ॥
किं नामाभ्रलिहेनापि, छायाहीनेन शाखिना ? ।
किंवा समुन्नतेनापि, वृष्टिहीनेन वार्मुचा ? ॥ १४६ ॥
किं वा निर्झरहीनेन, तुङ्गेनापि महीभृता ? ।
किं वा लावण्यहीनेन, सुरूपेणापि वर्ष्मणा ? ॥ १४७ ॥
किं वा गन्धविहीनेन, पुष्पेणापि विकासिना ? ।
अनेन त्वद्विहीनेन, राज्येनापि हि किं मम ? ॥ १४८ ॥
॥ त्रिभिर्विशेषकम् ॥

निर्ममस्य निरीहस्य, मुमुक्षोरपि ते सतः ।
प्रभो! पादौ न मोक्ष्यामि, का राज्यादानसंकथा ? ॥ १४९ ॥

१ मेघेन । २ शरीरेण ।

राज्यं पुत्राः कलत्राणि, मित्राण्यथ परिच्छदः ।
तृणवत्तुत्यजं सर्वं, त्वत्पादौ दुस्त्यजौ तु मे ॥ १५० ॥
राजीभवति नाथाहं, युवराजभवं यथा ।
त्वयि व्रतधरे शिष्यीभविष्याम्यधुना तथा ॥ १५१ ॥
गुरुपादाम्बुजोपास्तितत्परस्य श्रियानिशम् ।
[1]शैक्षस्य भैक्षमपि हि, साम्राज्यादतिरिच्यते ॥ १५२ ॥
भवं तरिष्याम्यज्ञोऽपि, भवत्पादावलम्ब्यहम् ।
गोपुच्छलग्नो हि तरेन्नदीं गोपालबालकः ॥ १५३ ॥
दीक्षां सह त्वयादास्ये, विहरिष्ये सह त्वया ।
दुःसहांश्च सहिष्येऽहं त्वया सह परीषहान् ॥ १५४ ॥
त्वया सहोपसर्गांश्च, सहिष्ये त्रिजगद्गुरो ! ।
कथंचिदपि न स्थास्याम्यहमत्र प्रसीद मे ॥ १५५ ॥

त्रिषष्टि० प० २, स० ३, पृ० ३८ ।

---

१ शिष्यस्य ।

[ २६ ]

## श्री नेमिकुमारं व्यावृत्तं दृष्ट्वा राजीमत्या विलापः ।

व्यावृत्तं नेमिनं दृष्ट्वा श्रुत्वा च व्रतकाङ्क्षिणम् ।
राजीमत्यपतत् पृथ्व्यां वल्लीवाकृष्टपादपा ॥ २१० ॥
तां सख्य सिषिचुर्भीतः शीताम्भोभिः सुगंधिभि ।
अवीजयन् व्यजनैश्च कदलीदलनिर्मितै ॥ २११ ॥
अवाप्तसंज्ञा चोत्थाय कपोललुलितालका ।
अश्रुधारातिम्यमानकञ्चुका विललाप सा ॥ २१२ ॥
नासीन्मनोरथोऽप्येव यन्नेमिः स्याद्वरो मम ।
केनाप्यभ्यर्थितो दैव ! यन्नेमिर्मे वर कृत ? ॥ २१३ ॥
विपरीतं कुतोऽकार्षीरकाण्डे दण्डपातवत् ? ।
एकान्तमसि मायावी त्व च विश्वासघातक ॥ २१४ ॥
यद्येवं प्रागपि ज्ञातं स्वभाग्यव्यत्ययान्मया ।
क्वायं जगत्त्रयोत्कृष्टो वरो नेमिरहं क च ? ॥ २१५ ॥
आत्मनोऽननुरूपाहं ज्ञाता नेमे ' त्वया यदि ।
तत्कथं चित्त हं मे जनित किं मनोरथ ? ॥ २१६ ॥
जनयित्वा च किं भग्न स्वामिन्मम मनोरथ ? ।
महता प्रतिपन्नं हि यावज्जीवमपि स्थिरम् ॥ २१७ ॥

१ अश्रुधाराभिरार्द्रीक्रियमाणकञ्चुका ।

प्रतिपन्नाद्भवन्तोऽपि चलन्ति यदि तत्प्रभो ।
मर्यादां लङ्घयिष्यन्ति निश्चितं जलराशय ॥ २१८ ॥
यद्वा तथापि नो दोषो दोषो मत्कर्मणामयम् ।
भवत्पाणिगृहीतात्वं वचमैव यदासदम् ॥ २१९ ॥
चारु मातृगृहं दिव्यमण्डपो रत्नवेदिका ।
विवाहायावयोरन्यदप्येतत्तदभवन्मुधा ॥ २२० ॥
धवलैर्गीयते यत्तत्र सर्वं सत्यमीदृशी ।
सत्योक्तिस्त्वं हि मे भर्ता गीतोऽप्यादौ न चाभव ॥ २२१ ॥
किं युग्मिना विघटनमकार्षं पूर्वजन्मनि १ ।
पाणिस्पर्शसुखमपि यत्प्राप्नुवन्ति नाहमाप्नवम् ॥ २२२ ॥
विलपन्तीति सा जघ्ने हस्ताब्जाभ्यामुरःस्थलम् ।
हारं च त्रोटयामास स्फोटयामास कङ्कणे ॥ २२३ ॥

—त्रिषष्टि० प० ८, स० ९, पृ० १३७ ।

---

१ दम्पतीनाम् ।

## [ २७ ]

## ऋषभप्रभोर्निर्वाणे भरतस्य क्रन्दनम् ।

स्वामिनिर्वाणकल्याणान्निर्वाणो दुःखपावकः ।
अदृष्टसुखलेशाना, नारकाणामपि क्षणम् ॥ ४९३ ॥
महाशोकसमाक्रान्तश्चक्रवर्ती तु तत्क्षणम् ।
पपात मूर्च्छितः पृथ्व्या, वज्राहत इवाऽचलः ॥ ४९४ ॥
महत्यप्यागते दुःखे, दुःखशैथिल्यकारणम् ।
विदाचकार रुदितं, न कश्चिदपि यत् तदा ॥ ४९५ ॥
दुःखशैथिल्यहेतुं तच्चक्रिणोऽज्ञापयत् स्वयम् ।
शक्रश्चकार रुदितं, महापूत्कारपूर्वकम् ॥ ४९६ ॥
अनु संक्रंदनं चक्रे, क्रन्दनं त्रिदशैरपि ।
समा हि समदुःखाना, चेष्टा भवति देहिनाम् ॥ ४९७ ॥
तेषां च रुदितं श्रुत्वा, संज्ञामासाद्य चक्र्यपि ।
उच्चैः स्वरेण चक्रन्द, ब्रह्माण्डं स्फोटयन्निव ॥ ४९८ ॥
रुदितेनाऽस्फुटद् राज्ञः, शोकग्रन्थिर्महानपि ।
पालीबंधो[1] महास्रोतोरंहसेव महीयसा ॥ ४९९ ॥
सुरासुरमनुष्याणां, रुदितै रुदितैस्ततः ।
त्रैलोक्ये करुणरसः, एकच्छत्र इवाऽभवत् ॥ ५०० ॥

---

१ महाप्रवाहवेगेन ।

तत प्रभृति लोकेऽपि, देहिनां शोकसम्भवे ।
[1]रोदनाध्वा प्रववृते, शोकशल्यविशल्यकृत् ॥ ५०१ ॥

नैसर्गिकमपि त्यक्त्वा, धैर्यं भरतनृपतिः ।
दुःखितो विललापैवं, तिर्यञ्चोऽपि हि दुःखयन् ॥ ५०२ ॥

हा तात ! हा जगद्बन्धो !, हा कृपारससागर ! ।
अज्ञानिह भवारण्ये, त्यक्तवानसि न कथम् ? ॥ ५०३ ॥

अम्लानकेवलज्ञानप्रकाशेन विना त्वया ।
तमसीव [2]ऋते दीप, स्थास्यामोऽत्र कथं भवे ? ॥ ५०४ ॥

छद्मस्थस्येव ते मौनं, किमिदं परमेश्वर ! ? ।
कुरुष्व देशनां नाऽनुगृह्णासि किन्नु जनम् ? ॥ ५०५ ॥

लोकाग्रमथनाऽयासीर्भगवन् ! भाषसे न यत् ।
आभाषन्ते दुःखितं मां, तेऽपि मद्बन्धवो न किम् ? ॥ ५०६ ॥

हुं ज्ञातमथवा ते हि, सदा स्वाम्यनुगामिनः ।
स्वामिनोऽननुगो नास्ति, मत्कुले मां विनाऽपरः ॥ ५०७ ॥

—त्रिषष्टि० प० १, स० ६, पृ० १६६ ।

---

१ रोदनमार्गः । २ विना ।

[ २८ ]

## अरण्ये सीतायास्त्यागे सेनानेः कारुण्यं तस्याश्च विलापः ।

गंगासागरमुत्तीर्यारण्ये सिंहनिनादके ।
गत्वा कृतान्तवदनस्तस्थौ किञ्चिद्विचिन्तयन् ॥ ३०९ ॥
साश्रुं म्लानमुखं तं च प्रेक्ष्य सीताब्रवीदिति ।
कथमित्थं स्थितोऽसि त्वं सशोक इव दुर्मनाः ? ॥ ३१० ॥
कृतान्तः कथमप्यूचे दुर्वचं वच्म्यहं कथम् ? ।
दुष्करं कृतवांश्चैतत् प्रेष्यभावेन दूषितः ॥ ३११ ॥
राक्षसावाससंवासापवादाल्लोकजन्मनः ।
भीतेन देवि ! रामेण त्याजितासि वनेऽनघे॥ ३१२ ॥
अपवादे चराख्याते रामं त्वत्त्यजनोद्यतम् ।
न्यषेधील्लक्ष्मणो लोकं प्रति क्रोधारुणेक्षणः ॥ ३१३ ॥
सिद्धाज्ञया निषिद्धश्च रामेण स रुदन् ययौ ।
अहं च प्रेषितोऽमुष्मिन् कार्ये पापोऽस्मि देवि ! हा ॥ ३१४ ॥
अमुष्मिञ्छ्वापदाकीर्णे मृत्योरेकनिकेतने ।
जीविष्यसि मया त्यक्ता स्वप्रभावेण केवलम् ॥ ३१५ ॥
तच्छ्रुत्वा स्यन्दनात् सीता मूर्छिता न्यपतद्भुवि ।
मृतेति बुद्ध्या सेनानीः पापंमन्यो रुरोद सः ॥ ३१६ ॥
सीतापि वनवातेन कथञ्चित् प्राप चेतनाम् ।
भूयो भूयोऽप्यमूर्च्छच्च चेतनामाससाद च ॥ ३१७ ॥

महत्यामथ वेलायां सुस्थीभूयेत्युवाच सा ।
इतोऽयोध्या कियद्दूरे रामस्तिष्ठति कुत्र वा ? ॥ ३१८ ॥
सेनानीरप्यथाद्दूरेऽयोध्या किं पृच्छ्यतेऽनया ? ।
उग्राज्ञस्य च रामस्य पार्श्वे देवि ! वार्तया ॥ ३१९ ॥
इति श्रुत्वापि सा रामभक्ता भूयोऽप्यभाषत ।
भद्र ! मद्वाचिकमिदं शंसे रामस्य मद्गिरा ॥ ३२० ॥
यदि निर्वादभीतस्त्वं परीक्षां नाकृथाः कथम् ? ।
शंकास्थाने हि सर्वोऽपि [1]दिव्यादि कुरुते जनः ॥ ३२१ ॥
अनुभोक्ष्ये स्वकर्माणि मन्दभाग्या यतोऽस्म्यहम् ।
नानुरूपं त्वकार्षीस्त्वं विवेकस्य कुलस्य च ॥ ३२२ ॥
यथा खलगिरात्याक्षीः स्वामिन्निर्दोषामपि माम् ।
तथा मिथ्यादृशां वाचा मा धर्मं जिनभाषितम् ॥ ३२३ ॥
इत्युक्त्वा मूर्छिता भूमौ पतितोत्थाय चाभ्यधात् ।
मया विना कथं रामो जीविष्यति हतास्मि हा ! ॥ ३२४ ॥
रामाय स्वस्त्याशंसेत्याशिषं लक्ष्मणस्य च ।
शिवास्ते सन्तु पन्थानो वत्स ! गच्छेत्यपरापरम् ॥ ३२५ ॥
—त्रिषष्टि० प० ७, स० ८, पृ० ११३ ।

---

१ मत्सन्देशान् । २ धर्मदिव्यान्तरे [illegible] दिव्यं करोति जन
इत्यस्यान्ते दर्शितं इतिभावः ।

[ २९ ]

## दयावीरश्रीनेमिनाथस्याग्रे ।

## पशूनां शिवादेवीप्रमुखपरिवाराणां चाक्रन्दनम् ।

ततो नेमिर्दयावीरो बभाषे निजसारथिम् ।
यत्रैते प्राणिनः सन्ति स्यन्दनं नय तत्र मे ॥ १७५ ॥
तथैव सारथिश्चक्रे ददर्श भगवानपि ।
विविधान् प्राणिनः प्राणापहारचकितात्मनः ॥ १७६ ॥
ग्रीवायां रज्जुभिर्बद्धाः केऽपि केऽपि च पादयोः ।
केऽपि क्षिप्ताः पञ्जरान्तः केऽपि पाशेषु पातिताः ॥ १७७ ॥
उन्मुखा दीननयना वेपमानशरीरकाः ।
ते प्रेक्षाचक्रिरे नेमिं प्रीणकं दर्शनादपि ॥ १७८ ॥
पाहि पाहीति ते नेमिं स्वस्वभाषाभिरब्रुवन् ।
तांश्च सारथिमाज्ञाप्य नेमिनाथोऽप्यमोचयत् ॥ १७९ ॥
स्वं स्वं स्थानं ततस्तेषु गतेषु प्राणिषु प्रभुः ।
रथं निवर्तयामास पुनर्निजगृहं प्रति ॥ १८० ॥
शिवा समुद्रविजयः कृष्णो रामोऽपरेऽपि हि ।
विहाय स्वस्वयानानि नेमिनः पुरतोऽभवन् ॥ १८१ ॥
शिवासमुद्रविजयावूचाते साश्रुलोचनौ ।
कस्मादकस्मादप्यस्माद् विनिवृत्तस्त्वमुत्सवात् ॥ १८२ ॥
नेमिरप्यब्रवीदेते प्राणिनो बन्धनैर्यथा ।
बद्धास्तथा वयमपि तिष्ठामः कर्मबन्धनैः ॥ १८३ ॥

यथैषां बन्धनान्मोक्षः कर्मबन्धात्तथात्मनः ।
कर्तुं दीक्षामुपादास्ये सौख्यार्थमनिरुपद्रवम् ॥ १८४ ॥
तन्नेमिवचनं श्रुत्वा तौ ज्ञात्वापि हृदूर्जु ।
रुरुदुर्यदवः सर्वेऽप्यश्रुदुर्दिनलोचनाः ॥ १८५ ॥
शिवासमुद्रविजयौ गाढमस्य जनार्दनः ।
रुदितं च प्रतिषिध्य बभाषेऽरिष्टनेमिनम् ॥ १८६ ॥
मम रामस्य तातानां सदा मान्योऽसि मानद ।
रूपं निरुपमं चेदं यौवनं च नवं तव ॥ १८७ ॥
किं च सापि स्नुषा राजीमती राजीवलोचना ।
तवानुरूपा तद् ब्रूहि किं ते वैराग्यकारणम् ? ॥ १८८ ॥
ये चैते पशवो दृष्टास्त्वया तेऽपि हि मोचिता[1] ।
पितॄणां बान्धवानां च तत्पूरय मनोरथम् ॥ १८९ ॥
पितरौ शोकनिर्मग्नौ न ह्युपेक्षितुमर्हसि ।
तत्रापि हि गुरू भ्रातः सर्वसाधारणं ह्यदम् ॥ १९० ॥
प्रीणिताः प्राणिनो दीना यथैते भवता तथा ।
भ्रातॄन् प्रीणय रामादीनपि स्वोद्वाहदर्शनात् ॥ १९१ ॥

—त्रिषष्टि० प० ८, स० ९, पृ० १३६ ।

---

१ सम्मोचिताः ।

[ ३० ]

## सगरचक्रिणोऽग्रे द्विजस्य कृत्रिमविलापः।

इत्यादिभिर्दुर्निमित्तैर्विद्धो हृदि शरैरिव ।
विमनाः प्राविशमहं चञ्चापुरुषवद्गृहम् ॥ ९८ ॥
मामापतन्तं सम्प्रेक्ष्य, ब्राह्मणी [1]विलुलत्कचा ।
सद्यो हा पुत्र ! हा पुत्रेत्याक्रन्दन्त्यपतद्भुवि ॥ ९९ ॥
ध्रुवं विपन्नो मे पुत्र, इति निश्चित्य चेतसा ।
अहमप्यपतं सद्यो, गतप्राण इवावनौ ॥ १०० ॥
मूर्छाविरामे भूयोऽपि, प्रलपन् करुणस्वरम् ।
अपश्यं गृहमध्येऽहं, सर्पदष्टमिमं सुतम् ॥ १०१ ॥
भोजनाद्यप्यकृत्वास्थां, यावज्जाग्रदहं निशि ।
कुलदेवतया तावदिदमादेशि मे पुनः ॥ १०२ ॥
भोः किमेवं समुद्विग्नोऽस्यमुना पुत्रमृत्युना ? ॥
[2]संपादयामि ते पुत्रं, यथादेशं करोषि मे ॥ १०३ ॥
देव्याः प्रमाणमादेश, इत्यवोचमहं ततः ।
पुत्रार्थे शोकविधुरैः, किं वा न प्रतिपद्यते ॥ १०४ ॥
कुलदेवतयाथोक्तं, [3]विपन्नो यत्र कोऽपि न ।
ततोऽग्निं मङ्गलगृहात्, कुतोऽप्यानय सत्वरम् ॥ १०५ ॥
ततस्तनयलोभेन, प्रत्यहं प्रतिमन्दिरम् ।
तत्पृच्छन् हस्यमानोऽहं, भ्रान्तोऽर्भक इवाक्रमम् ॥ १०६ ॥

१ विकीर्णकेशाः। २ जीवयामि। ३ मृतः।

पृच्छ्यमानो जनः सर्वोऽप्याचष्टे स्म गृहे गृहे ।
संख्यातीतान् मृतान् वेश्म, नामृतं किञ्चिदप्यभूत् ॥ १०७ ॥
तदप्राप्त्या च भग्नाशः, धैरासुरिव नष्टधीः ।
व्यजिज्ञपमहं दीनस्तत्सर्वं कुलदेवताम् ॥ १०८ ॥
आदिशद्देवताप्येवं, न मङ्गलगृहं यदि ।
अमङ्गलं कथमहं, तव रक्षितुमीश्वरी? ॥ १०९ ॥
तया च देवतावाचा, तोत्रेणेव प्रवर्तितः ।
प्रतिग्रामं प्रतिपुरि, अभ्रमदनिहागमम् ॥ ११० ॥
अपि धात्र्याः समस्तायास्त्राता त्वमसि विश्रुतः ।
न कोऽपि प्रतिमल्लोऽपि, दोर्मदक्षमरस्य ते ॥ १११ ॥
वैताढ्यगिरिदुर्गस्थश्रेणिद्वयगतास्तव ।
विद्याधरा अपि दधत्याज्ञां शिरसि माल्यवत् ॥ ११२ ॥
देवा अपि तवादेशं, सदा कुर्वन्ति भृत्यवत् ।
वांछितार्थं प्रयच्छन्ति, निधयश्च तवानिशम् ॥ ११३ ॥
ततस्त्वां शरणं प्राप्तो, दीनत्राणैकसत्रिणम् ।
तदग्निं मंगलगृहात्, कुतोऽप्यानय मत्कृते ॥ ११४ ॥
विपन्नमपि मे पुत्रं, सा यथा कुलदेवता ।
प्रत्यानयति येनास्मि, दुःखितः पुत्रमृत्युना ॥ ११५ ॥
—त्रिषष्टि० प० २, स० ६, पृ० ८९ ।

---

१ गतप्राण इव । २ समर्था । ३ वेणुदण्डेनेव । ४ प्रसिद्धः ।
५ दीनरक्षणे निश्चितदीक्षिणम् ।

[ ३१ ]

## पितुर्मृत्युसमये विष्णोस्तन्मातुश्चरोदनम् ।

तत्र च प्रविशन् विष्णुर्जननीद्वा स्थयैकया ।
अग्रे भूत्वा सकरुणं व्यज्ञपीदश्रुदश्रिया ॥ १११ ॥

कुमार ! परित्रायस्व परित्रायस्व नन्वसौ ।
जीवत्यपि महाराजे देवीदं दुर्न्यस्यति ॥ ११२ ॥

तदाकर्ण्य वचो विष्णुः संभ्रान्तो मातुरालयम् ।
जगाम वीक्षाञ्चक्रे च मातरं ब्रुवतीमिति ॥ ११३ ॥

पतिप्रसादादुद्भूता ये प्राज्या रत्नराशयः ।
अनन्तं काञ्चनं यच्च ये वा रजतमध्यया ॥ ११४ ॥

मुक्तामया वज्रमया जात्यरत्नमयाश्च ये ।
संमिश्रा ये च नेपथ्यसमुदाया सहस्रश ॥ ११५ ॥

यच्चान्यत् कोशसर्वस्वं सततशेयां तदर्प्यताम् ।
महापथप्रस्थितानां पाथेयं हीदमादिनम् ॥ ११६ ॥

पत्युर्विपत्तौ वैधव्यमहास्मि न मनागपि ।
अहं तदग्रे यास्यामीत्यनल. सज्ज्यतां द्रुतम् ॥ ११७ ॥

इति ब्रुवाणां जननीं जननी दु खसम्पद ।
उपेत्य नत्वा च हरिर्व्याहरद्गद्गदाक्षरम् ॥ ११८ ॥

---

१ अनुचित व्यस्यति । २ मृत्युमार्गप्रस्थितानाम् । ३ विनाशे । ४ जनयित्रीम् ।

मातर्मा तन्त्वनपि मा मन्दभाग्यं किमुज्झसि ।
अहो विरुद्धं मे दैवं देव्यैवं यत् प्रचक्रमे ॥ ११९ ॥

अस्मादृग्व्यप्युनाचैनं तज्ज्ञैः सम्यक् परीक्षित ।
त्वत्तातस्योपस्थितोऽयं रोग प्राणहरो हरे ! ॥ १२० ॥

नाहं क्षणमपि श्रोतु विधवेत्यक्षराण्यहम् ।
कौसुंभधारिणी यास्याम्यग्रतस्त्वत्पितुस्तत ॥ १२१ ॥
कृतार्थं मेऽभवज्जन्म पत्या शिवहीभुजा ।
पुत्र ! त्वया च पुत्रेण पश्चमेनार्धचक्रिणा ॥ १२२ ॥
पत्युर्विपत्तौ यास्यन्ति मत्प्राणा स्वयमेव हि ।
त्यक्ष्यामि तान् प्रविश्याग्नौ मा भूत्मे हीनसत्त्वता ॥ १२३ ॥
तत्क्षत्रियकुलाचारमाचरन्त्या ममाधुना ।
मा स्म भूरन्तरायस्त्वं वत्स ! वात्सल्यतोऽपि हि ॥ १२४ ॥
सम 'सुदर्शनेन' त्वं पुत्र ! नंद मदाशिषा ।
प्रत्युग्रे प्रयास्येषा छुप्पवर्तैकवर्त्मना ॥ १२५ ॥
अन्तिमा प्रार्थना तेऽद्य कुमारैना करोम्यहम् ।
निपेत्रर्फ विधेरस्य त्वया वाच्यं न किञ्चन ॥ १२६ ॥
एव मुक्त्वा तु सा स्वामिविपच्छ्रवणकातरा ।
परलोकपुरद्वारं प्रवेष्टुमनल ययौ ॥ १२७ ॥
दु खानुबन्धिभिर्दुःखै क्रथाङ्गो वीवधैरिव ।
सैमेऽपि प्रम्सरप्रसाद पितु पार्श्व ययौ हरिः ॥ १२८ ॥

१ वैधव्यार्थं । २ अग्निमार्गेण । ३ मरणविषे. । ४ भारैरिव ।
५ छद्मदेशेऽपि ।

स्मरन् स्वां मातरं पश्यंस्तथा पितरमातुरम् ।
[1]प्रतीकारासहो[2] विष्णुः क्लीबमान्यपतद्भुवि ॥ १२९ ॥
राजा दाहज्वरार्तोऽपि बभाषे धैर्यमाश्रयन् ।
किमेतद्वत्स ! कातर्यं[3] स्वकुलानुचितं तव ॥ १३० ॥
इयं हि त्वद्भुजाधारा वत्स ! देवी वसुन्धरा ।
अधैर्याद्विपतन्नस्यां कथं नाम न लज्जसे ॥ १३१ ॥
त्वय्युच्चैः पुरुषसिंह इत्याख्याकारिणो मम ।
अज्ञानकारितां मा दास्त्वमेवं धैर्यमुत्सृजन् ॥ १३२ ॥
एवं शार्ङ्गिणमाश्वास्य शिवराजः शिवाशय ।
कालधर्मं ययौ सार्यं कः कालं यातुमीश्वरः ? ॥१३३॥
श्रुत्वा च मूर्च्छितो विष्णुः पपात धरणीतले ।
महाद्रुमो वात्ययेव[4] वार्तेनेव च वार्तकी[5] ॥ १३४ ॥
अथ सिक्तः पयस्कुम्भैर्लब्धसंज्ञो जनार्दनः ।
हा तात ! तात ! तातेति क्रन्दन्नुत्तिष्ठति स्म च ॥ १३५ ॥
न किं सन्तप्यते तेऽङ्गं गुणः कस्यौषधस्य वा ।
प्रत्यय कस्य वैधम्य सुखनिद्राथवाद्य किम् ॥ १३६॥
ब्रूहि तात ! प्रसादं मे कुर्वेति स्नेहमोहित ।
प्रलाप क्षणं विष्णुर्विललाप च तत्क्षणम् । १३७ ॥

— त्रिषष्टि० प० ४, स० ५, पृ० ७३ ।

१ रोगग्रस्तम् । २ रोगापायेऽसमर्थः । ३ भीरुत्वम् । ४ वातसमूहेन झंझावातेन वा । ५ वातरोगी पुमान् ।

[ २२ ]

## दवदन्तीत्यागसमये नलस्य शोकः प्रियविरहे च दवदन्त्या विलापः ।

दवदन्त्यैकवस्त्रेयमेका स्वपिति वर्त्मनि ।
अहो नलस्य शुद्धान्तमसूर्यंपश्यमीदृशम् ॥ ५२९ ॥
अहो मत्कर्मदोषेण कुलीनेयं सुलोचना ।
प्रविवेश दशामेतां हताशः किं करोम्यहम् ? ॥ ५३० ॥
मयि सत्यपि पार्श्वस्थेऽप्युन्मत्तवदनाथवत् ।
भूमौ शेते वरारोहा जीवत्यद्यापि ही नलः ॥ ५३१ ॥
मयैकाकिन्यसौ मुक्ता प्रबुद्धा मुग्धलोचना ।
मोक्ष्यते जीवितेनापि सार्द्धमेव मया सह ॥ ५३२ ॥
भक्तां तदेनां यद्यत्र नान्यतो गन्तुमुत्सहे ।
जीवितं मरणं वापि मम स्यादनया सह ॥ ५३३ ॥
अथवानेकदुःखानामरण्ये नरकोपमे ।
पात्रे नारकिक इव भवाम्येकोऽहमस्त्वसौ ॥ ५३४ ॥
मया तु वस्त्रे लिखितामाशां कृत्वा मृगाक्ष्यसौ ।
स्वयं गत्वा कुण्डिनीं वत्स्यति स्वजनौकसि ॥ ५३५ ॥
इति निश्चित्य तां रात्रिमतिक्रम्य च नैषधिः ।
प्रबोधसमये तस्यास्तिरोधात्त्वरितक्रमम् ॥ ५३६ ॥

१ अन्तःपुरम् । २ [illegible] । ३ निजनिवासे ।

डैनिद्रपङ्कजामोदिमृदुमल्यूपमारुते ।
निशाशेषे दवदन्ती स्वप्नमेवमुदैक्षत ॥ ५३७ ॥
यद्वहं फलिते फुल्ले पत्रले चूतपादपे ।
आरुह्य स्फलमास्वाद शृण्वन्ती भृङ्गनिस्वनान् ॥ ५३८ ॥
अकस्माद्वनकरिणोन्मूलि च स पादप ।
पतिताहं च मेदिन्या तर्तोऽड इव पक्षिण ॥ ५३९ ॥
भैमी प्रबुद्धा तत्कालनपदयती नल पुर ।
दिशोऽवलोक्यामास मृगी यूथादिव च्युता ॥ ५४० ॥
अचिंतयच्च पतितमैत्याहितमनाहतम् ।
अशरण्यामरण्ये मा प्रेयानपि मुमोच यत् ॥ ५४१ ॥
यद्वा मुखक्षालनाय प्राणेशो मे निशात्यये ।
गतो भविष्यति क्वापि वायानेतु जलाशये [1] ॥५४२॥
नीतो रमयितु यद्वोपरध्य नियत नलः ।
कयाचिदपि [3]खेचर्या [4]तद्रूपालोकलुब्धया ॥ ५४३ ॥
क्रीडन् कलाया कस्याचिज्जितो मन्ये तया च स ।
कृतावस्थानपणतस्तस्थौ चाद्यापि नेति यत् ॥ ५४४ ॥
त द्रुमा पर्वतास्तेऽपि तदरण्य च सा च भू ।
एकमेव न पश्यामि नल कमललोचनम् ॥ ५४५ ॥
एव चिंताप्रपन्ना सा दर्श दर्श दिशोऽखिला ।
प्राणनाथमपश्यन्ती निज स्वप्न व्यचारयत् ॥ ५४६ ॥

१ निर्मलम् । २ क्ष्यम् । ३ विद्याधर्या । ४ नलरूपदर्शनलुब्धया ।

सहकारे नलो राजा राज्यं पुष्पफलादिकम् ।
फलास्वादो राज्यसुखं भृङ्गः परिजनो मम ॥ ५४७ ॥
[1]सहकारतरुर्यश्चोन्मूलितो वनदन्तिना ।
राज्यादुत्थाप्य दैवेन प्रावास्यत स मे पतिः ॥ ५४८ ॥
यच्चास्मि पतिता वृक्षात्तद्भ्रष्टास्मि नलादहम् ।
स्वप्नेनानेन नूनं मे नलो दुर्लभदर्शनः ॥ ५४९ ॥

॥ त्रिभिर्विशेषकम् ॥

स्वप्नार्थमिति निर्णीय सा दध्याविति धीमती ।
न राज्यं न पतिश्चेति द्वयमापतितं मम ॥ ५५० ॥
व्यलपन्मुक्तकण्ठं च सा तारं तरललोचना ।
दुर्दशापतितानां हि स्त्रीणां धैर्यगुणः कुतः ? ॥ ५५१ ॥
हा नाथ ! मां किमत्याक्षीः ? किं भाराय तवाभवम् ? ।
न ह्यात्मीया कञ्चुलिका जातु भाराय भोगिनः ॥ ५५२ ॥
नर्मणान्तरितोऽभूस्त्वं यद्वा वल्लीवने क्वचित् ? ।
तत्प्रकाशो भव चिरं न हि नर्मापि शर्मदम् ॥ ५५३ ॥
प्रार्थये च प्रसीदन्तु मह्यं हे वनदेवताः ! ।
प्राणेशं दर्शयत मे मार्गं वा त्वद्विनिर्गतम् ॥ ५५४ ॥
द्विधा भव धरित्रि ! त्वं वालुकमिव पाकिमम् ।
त्वद्दत्तविवरेणाहं प्रविश्याप्नोमि [9]निर्वृतिम् ॥ ५५५ ॥

---

१ आम्रस्य । २ उच्चैः । ३ दीर्घलोचना । ४ मर्दस्व । ५ हास्येन । ६ कल्याणदम् । ७ वालुक चिर्भटक, भाषायां 'चीभडु' इति । ८ पक्वम् । ९ शान्तिम् ।

एवं भैमी विल्पंती रुदंती नयनोदकै ।
सारणीवारिभिरिव सिषेचारण्यपादपान् ॥ ५५६ ॥
जले स्थले वा छायायामातपे वा नलं विना ।
ज्वरार्तेया इव तस्या न निर्वृतिल्वोऽप्यभूत् ॥ ५५७ ॥
—त्रिषष्टि० प० ८, स० ३, पृ० ५९ ।

[ ३३ ]

## सगरचक्रवर्तिषष्टिसहस्रपुत्राणां मरणेऽन्तःपुरस्त्रीणां सेनाधिपतिसामन्तादीनां च विलापाः ।

चक्रिसैन्येऽथ सैन्यानामाक्रन्द उदभून्महान् ।
महाजलाशय इव, रिक्तीभवति यादसाम् ॥ १ ॥
केऽप्यास्वादितकिम्पाका इव पीतविषा इव ।
सर्पदष्टा इवोन्मूर्च्छा, पेतुर्वसुमतीतले ॥ २ ॥
केचिदास्फाल्यामासु, स्वशिरो नारिकेरवत् ।
केचिदाजघ्निरे वक्ष, कृतागस्कमिवासकृत् ॥ ३ ॥
पादान् प्रसार्य केऽप्यस्थु, कृत्यमूढा पुरन्ध्रिवत् ।
[3]भृगूण्यारुरुहुर्झम्पा, कपिवत् केऽपि [4]दित्सव ॥ ४ ॥
कूष्माण्डदारमुदराण्येके स्वानि दिदीर्षव ।
चकृषु क्षुरिका कोशाद्यमजिह्वासहोदराम् ॥ ५ ॥

१ जलचरजीवानाम् । २ कृतापराधम् । ३ भृगुणि गिरराशि पर्वतात्पत नस्थानानीत्यर्थे । ४ दातुमिच्छव ।

आलानं तरुशाखायामुद्बद्धमनसोऽपरे ।
बबन्धुरुत्तरीयाणि, [1]लीलादोलां यथा पुरा ॥ ६ ॥
शिरसोऽत्रोटयन् केऽपि, केशान् क्लेशात्कुशानिव ।
केऽप्यंगलग्नं नेपथ्यं, चिक्षिपु स्वेदबिन्दुवत् ॥ ७ ॥
हस्तन्यस्तकपोला केऽप्यस्थुश्चिन्तापरायणा ।
मदस्रोतंभनस्तम्भमजङ्गकारुक्षवत् ॥ ८ ॥
असंनह्यन्त केचिच्च, परिधानांशुकान्यपि ।
[2]विसंस्थुलाङ्गा व्यलुठन्नुन्मत्ता इव भूतले ॥ ९ ॥
विलापोऽन्तःपुरे स्त्रीणां, [3]हरिणीणामिवाम्बरे ।
हृदयाकम्पजनकः, पृथक् पृथगभूदिति ॥ १० ॥
प्राणेशान् गृह्णतास्माकं, प्राणानेव मुष्णता ।
कि[4]मधर्षणमिदं रे दैवाचरितं त्वया ? ॥ ११ ॥
प्रसीद विवरं देहि, स्फुटित्वा देवि ! [5]काश्यपि ! ।
[6]अभ्रादपि पतितानां, शरणं धरणी खलु ॥ १२ ॥
अय चंदनगोधानामिवास्माकमुपर्यये ।
विद्युद्दण्डम[7]काण्डेऽपि, दैव ! पातय निर्दयम् ॥ १३ ॥
प्राणाः ! शिवा च पन्थानो, यूयं यात यथेप्सितम् ।
विमुञ्चतास्मच्छरीरमवस्करकुटीमिव ॥ १४ ॥
समायाहि महातन्द्रे, ! सर्वदुःखापनोदिनि ! ।
मन्दाकिनि ! त्वमुत्सर्प, ज्वलमृत्युं प्रयच्छ वा ॥ १५ ॥

---

१ क्रीडादोलाम् । २ शिथिलाङ्गा । ३ मृगीणाम् । ४ अधर्षणम् । ५ हे पृथ्वि ! । ६ आकाशात् । ७ असमये ।

अस्यां गिरितलाटव्यां, प्रादुर्भव दवानल ! ।
अनुयामः पतिगतिं, तव साहाय्यतो यथा ॥ १६ ॥
हा केशपाश ! मुञ्चाय, सुमनोदामसौहृदम्।
मुक्ताभ्यां दीयतां नेत्रे !, कज्जलाय जलाञ्जलिः ॥ १७ ॥
पत्रलेखनकण्डूतिं, मा कृथाथां कपोलकौ ! ।
अलक्तकेन्यतिकरश्रद्धानधर ! मा धरः ॥ १८ ॥
गीताकर्णनवत्कर्णौ !, त्यजतं रत्नकर्णिकाम् ।
हे कंठ ! कंठिकोत्कंठां मा कार्षीस्त्वमतः परम् ॥ १९ ॥
वक्षोजावद्य वां हारो, नीहारोंभोरुहामिव ।
सद्यो हृदय ! भूयास्तां, फैर्वैरुस्कवद् द्विधा ॥ २० ॥
बाहू ! कङ्कणकेयूरैर्भारैरिव झैतं च वाम् ।
नितम्ब ! रसनां मुञ्च, प्रातश्चन्द्र इव प्रभाम् ॥ २१ ॥
अनासैरिव पर्यांप्तं, हे पादौ ! पादभूषणैः ।
अलमंगांगरागैस्तै, कैंपिकच्छूमयैरिव ॥ २२ ॥
एवमंत पुरस्त्रीणां, हृदि तै. करुणस्वरैः ।
घनान्यपि प्रतिरवै-रुरुदु सह बन्धुवत् ॥ २३ ॥
सेनाधिपतिसामन्त-मण्डलेशादयोऽपि हि ।
शोकह्रीकोधशङ्कादि-विचित्रं प्रालपन्निति ॥ २४ ॥
हा स्वामीपुत्राः ! क्व गता न हि संविद्महे वयम् ।
भूतानुयानोऽद्य यथा, स्वामिशासनतत्पराः ॥ २५ ॥

१ पुष्पमाला । २ सकन्धः । ३ हिमम् । ४ कर्कटीवत् । ५ अलम् । ६ हे अंग ! । ७ कण्डुजनक औषधिविशेषः ।

किं तिरोधानविद्येह, भवता क्वाप्युपस्थिता ।
सा तु खेदाय भृत्यानां, प्रयोक्तुं नहि युज्यते ॥ २६ ॥
युष्मान्नष्टान् विनष्टान् वा, हित्वा गच्छता सुराम् ।
कथं द्रक्ष्यति न स्वामी, कुपितस्त्वहनामिन [2] ॥ २७ ॥
युष्मान्विना गतासोऽद्य, लोकोऽप्युपहसिष्यति ।
हृदय ! स्फुट रे सद्य, पय सिक्तामुदुम्भरन् ॥ २८ ॥
तिष्ठ तिष्ठाहिखेट ! त्व, छलेन घ्नन न पतीन् ।
स्मशानष्टापदग्रामे, दग्धायासी क रेऽधुना [3] ॥ २९ ॥
खड्ग खड्गो धन्व धन्व, शक्ति शक्तिर्हा गदा ।
युद्धाय सज्जीभव रे, कियद्दूरं गमिष्यसि [4] ॥ ३० ॥
अमी तावदिह त्यक्त्वा, यष्टुर्ये स्वामिसूनव ।
हहा तत्र गतानद्य, त्यक्ष्यति स्वाम्यपि द्रुतम् ॥ ३१ ॥
अगतानपि नस्तत्र, जीवन्तोऽपि व तिष्ठत ।
श्रुत्वा लज्जिष्यते स्वामी, यदि वा निर्ह्रीष्यति ॥ ३२ ॥
एवं रुदित्वा विविध, भूय संभूय ते मिथ ।
सैहज धैर्यमालम्ब्य, मन्त्रयामासुरित्यथ ॥ ३३ ॥
पूर्वादितैविधानेभ्य, परोक्तविधिर्बलिविधि [5] ।
सर्वेभ्यो बलवास्तस्मान्न कोऽपि नरेश्वर ॥ ३४ ॥
तत्रात्यक्षप्रतीकारे, मुधा प्रतिचिकीर्षितम् ।

१ अदृश्यकरणविद्या । २ अपव । ३ हे नागराज ! । ४ स्वामिविक्रम् । ५ पूर्वविधिभ्य परोविधिर्बलवान् इति नियमेन । ६ दैवम् ।

व्योम्न प्रतिजिघांसेव जिवृक्षेव नभस्वत ॥ ३५ ॥
एभि मर्त्यैस्तदल, हस्त्यश्वाद्यखिलं प्रभो ।
इदानीमर्पयाम स्वं, वयं न्यासधरा इव ॥ ३६ ॥
उचितं रुचितं चापि, यत्किञ्चन तत पग्म् ।
विदधातु तदत्नासु, स्वामी किं नो विचिन्तया ॥ ३७ ॥
एवमालोच्य ते सर्वे, सर्वमन्त पुरादिकम् ।
आदाय दीनवदना, प्रत्ययोध्यं प्रतस्थिरे ॥ ३८ ॥
मन्दमन्दमथोत्साहहीना म्लानाननेक्षणा ।
अयोध्यासन्निधिभुव प्रापु सुतोत्थिता इव ॥ ३९ ॥
[3]निषण्णास्तत्र च स्थित्वा, नीता वध्यशिलामिव ।
उपविश्य महीपीठेऽन्योऽन्यमेव बभाषिरे ॥ ४० ॥
भक्ता बहुज्ञा दोषमन्तो, दृष्टसारा पुरापि च ।
इत्यादिष्टा वय राज्ञा, सत्कृत्य तनयै सह ॥ ४१ ॥
विना कुमारानभ्येत्य, स्वामिनोऽग्रे वय कथम् ।
वदनं धारयिष्यामो, नासिकारहिता इव [?] ॥ ४२ ॥
कथं वा कथयिष्याम, पुत्रवृत्तान्तमीदृशम् [?] ।
[4]अकाण्डाशनिसम्पात सदृश वसुधापते ॥ ४३ ॥
अत परमहो तत्रास्माक गन्तु न युज्यते ।
युज्यते किंतु मरण, शरणं सर्वदु खिनाम् ॥ ४४ ॥
सम्भावनाया प्रगुणीकृताया अशभाजिन ।

१ प्रति हन्तुमिच्छा । २ ग्रहीतुमिच्छा । ३ स्थिता । ४ असमये वज्रपात इव ।

पुंसो शरीरिकस्येव, जीवितव्येन किं ननु ? ॥ ४५ ॥
किं च पुत्रक्षयं श्रुत्वा, दुःश्रवं चक्रवर्त्यपि ।
चेद्विपद्येत तदपि, मृत्युरप्रसगे हि न ॥ ४६ ॥
मन्त्रयित्वेति ते सर्वे, मरणे कृतनिश्चया ।
यावत्तस्थुस्तावदागादेकः कापायभृद्द्विजः ॥ ४७ ॥

—त्रिषष्टि० प० २, स० ६, पृ० ८६–८७

---

[ ३४ ]

## षष्टिसहस्रपुत्राणां मरणश्रवणे सगरचक्र्यादीनां विलापः ।

नाशेनैकस्य पुत्रस्य न शोचिष्याम्यतः परम् ।
महत्त्वमपि मा शोचीः सर्वपुत्रक्षयेऽपि हि ॥ १५४ ॥
षष्टिसहस्रसंख्यास्ते, दोर्विक्रमविराजिनः ।
राजन् ! विपन्नास्तनया, युगपत् कालयोगतः ॥ १५५ ॥
अत्रान्तरे च सामन्तामात्यसेनाधिपादयः ।
अपरेऽपि कुमाराणां, जना आसन्नवर्तिनः ॥ १५६ ॥
उत्तरीयच्छन्नमुखाः, शालीना इव लज्जया ।
विवर्णदेहाः खेदेन दवदग्धा इव द्रुमाः ॥ १५७ ॥
अत्यन्तशून्यमनसः, पिशाचकिलता इव ।
उदश्रुलोचना दीना मुषिता कृपणा इव ॥ १५८ ॥

---

१ म्रियत । २ कषायवस्त्रधारी । ३ लज्जावन्त इव । ४ वनाग्निदग्धा ।

प्रस्खलच्चरणन्यासा, दष्टा इव भुजङ्गमैः ।
[1]आस्थानं युगपद्राज्ञो-विशन् संकेतिता इव ॥ १५९ ॥

॥ चतुर्भिः कलापकम् ॥

राजानं ते नमस्कृत्य, यथास्थानमुपाविशन् ।
[2]विविक्षव इव क्षोणीं, ते च तस्थुरधोमुखाः ॥ १६० ॥

ता निमराचमाकर्ण्य, दृष्ट्वा तांश्च तथाविधान् ।
कुमारवर्जमायातान् [3]निषादिद्विपानिव ॥ १६१ ॥

लिखितो नूल्लिखितो नु, सुप्तो नूत्तम्भितो नु वा ।
शून्यो निष्पन्दनयनो, द्रागभूदवनीपतिः ॥ १६२ ॥

॥ युग्मम् ॥

आप्तमूर्छमधैर्येण धैर्येण च [4]तथास्थितम् ।
पुनर्बोधयितुं विप्र, प्रोवाच पृथिवीपतिम् ॥ १६३ ॥

त्वमसि [5]क्ष्मापते ! निश्वमोहनिद्राविपस्वत ।
ऋषभस्वामिनो वस्यो, भ्राताचास्यजितप्रभो ॥ १६४ ॥

इत्थं [6]पृथग्जन इव, भवन्मोहवशंवद ।
[7]तयो कलङ्कमादत्सेऽधुना किं धरणीधव ! ॥ १६५ ॥

राजापि दध्यौ विप्रोऽयं, [8]स्वपुत्रातापदेशन ।
मत्पुत्रक्षयनाख्यस्य, जगौ प्रस्तावनामिमाम् ॥ १६६ ॥

१ सभामण्डपम् । २ प्रविष्टुमिच्छव । ३ हस्तिपकशून्यगजानिव । ४ स्वस्थम् । ५ हे राजन् । ६ सामान्यजन इव । ७ ऋषभाजितस्वामिनो । ८ स्वपुत्रमरणमिषात् ।

व्यक्तं च शसयधुना, कुमाराणामसौ क्षयन् ।
कुमारवर्जमायाता प्रधानपुरुषा अमी ॥ १६७ ॥
युत सम्भाव्यते तेषा, क्षयश्च मनसापि हि ।
भुवि सञ्चरता स्वैरं, वने केसरिणामिव ॥ १६८ ॥
महाबलपरीवारा, दुर्धरा स्नौन्यसापि हि ।
केन शक्या निहन्तुं ते, हतास्खलितशक्तय ¹ ॥ १६९ ॥
चिन्तयित्वेति किमिदमिति पृष्टा क्षमाभुजा ² ।
ज्वलनप्रभवृत्तान्तं, शशंसु सचिवादय ॥ १७० ॥
ताडित कुलिशेनेव, तेनोदन्तेन भूपति ।
पपात मूर्छित पृथ्व्या, पृथिवीमपि कम्पयन् ॥ १७१ ॥
मातरश्च कुमाराणां, निपेतुर्मूर्छया क्षितौ ।
पितुर्मातुश्च तुल्य हि, दु:ख सुतवियोगजम् ॥ १७२ ॥
राजवेश्मनि लोकानामाक्रन्दोऽथ महानभूत् ।
समुद्रतटगर्तोत्तीर्णानां यादसामिव ॥ १७३ ॥
मन्त्र्यादयोऽपि ते स्वामिपुत्रव्यापत्तिसाक्षिणम् ।
आत्मानमतिनिन्दन्तो, रुरुदु करुणस्वरम् ॥ १७४ ॥
तादृशीं स्वामिनोऽवस्था, ता वीक्षितुमिवाक्षमा ।
अञ्जलिच्छन्नवदना, पूच्चक्रुर्वेत्रपाणय ³ ॥ १७५ ॥
प्राणप्रियाण्यप्यस्त्राणि, त्यजन्तश्चात्मरक्षका ।
प्रलपन्तोऽलुठन् भूमौ, वातभग्ना इव द्रुमा ॥ १७६ ॥

१ वृत्तान्तेन । २ व्याजनिर्मरणम् । ३ द्वारपाला ।

स्वकञ्चुकान् कञ्चुकिन, स्फाटयन्तोऽरटन् भृशम् ।
दैवानलान्तः पतिता, इव तित्तिरिपक्षिणः ॥ १७७ ॥
हृदय कुट्टयन्त स्व, चिरात्प्राप्तमिव द्विषम् ।
चेट्यश्चेटाश्च चक्रन्दुर्हता स्म इति भाषिण ॥ १७८ ॥
तालवृन्तानिलेनाम्बुसेकेन च महीपति ।
राज्यश्च सञ्ज्ञामासेदुर्दुःखैशल्यप्रतोदनीम् ॥ १७९ ॥
मैलिनीभूतवासस्का, नेत्राश्रुजलकज्जलै ।
छाद्यमानकपोलाद्यो लुलितालकवल्लिभि ॥ १८० ॥
उर स्थलकराघातत्रुटद्धारयष्टय ।
निर्भरं भूमिलुठनस्फुटत्कणमौक्तिका ॥ १८१ ॥
धूम शोकानलस्येवोज्झन्त्यो नि श्वासमुच्चकै ।
शुष्यत्कण्ठाधरदला, रा ज्यन्योऽरदन्नथ ॥ १८२ ॥
॥ त्रिभिर्विशेषकम् ॥
धैर्यं लज्जां विवेकं च, विहायैकपदेऽपि हि ।
राज्ञीवच्छोकविधुरो, विललापति भूपति ॥ १८३ ॥
हे कुमारा ! क यूय न्य, निर्नेतध्व विहारत ।
राज्यायावसरो वोऽद्य, व्रताय सास्म्य तु ॥ १८४ ॥
कथ न कोऽपि ब्रूते च, स्त्यनुक्त द्विजन्मना ? ।
दैस्युनेव छद्मेन, देवेन मुषितोऽस्मि ही ॥ १८५ ॥
अरे रे दैव ! कुत्रासि, कुत्रासि ज्वलनप्रभ ! ।

१ चनाभिगम्य । २ दु खशल्य तोदनीम । ३ मलिनीभूतवस्त्रा । ४ विशीर्णकेशलतैर्द्दै । ५ चौरेणेव । ६ चोरितोऽस्मि ।

[1]अरण्यानीसमुत्पन्न[2]भूरुहानिव [3]दोहदः ॥ १९६ ॥
उदयाय च पूर्णेन्दुर्दैवाद् ग्रस्तश्च राहुणा ।
[4]फलेग्रहिश्च सञ्जज्ञे, तरुर्भग्नश्च [5]कुम्भिना ॥ १९७ ॥
आगता च [6]तरी तीरं, भग्ना च तटभूभृता ।
उन्नतश्च [7]नवाम्भोदो, विकीर्णश्च [8]नभस्वता ॥ १९८ ॥
निष्पन्नं च [9]व्रीहिवपं, दग्धं च नववह्निना ।
धर्मार्थकामयोग्याश्च, जाता यूयं हताश्च हा ॥ १९९ ॥
॥ त्रिभिर्विशेषकम् ॥
प्राप्यापि मद्गृहं वत्सा !, अकृतार्था गता ह हा ।
आढ्यस्य कृपणस्येव, वेश्मोपेत्य [10]वनीपकाः ॥ २०० ॥
तदद्य किमु चक्राद्यै, रत्नैर्निधिभिरप्यलम् ? ।
युष्मान् विना विरहिणो, ज्योत्स्नोद्यानादिकै[11]रिव ॥ २०१ ॥
षट्खंडभरतक्षेत्रराज्येन यदि वाऽसुभिः ।
अमुभ्योऽपि प्रियैः पुत्रैर्विना भूतस्य किं मम ? ॥ २०२ ॥
एवं विलापिनमथो, भूनाथं श्रावकद्विजः ।
स बोधयितुमित्यूचे, सुधामधुरया गिरा ॥ २०३ ॥
—त्रिषष्टि० प० २, स० ६, पृ० ९१–९३

१ महदरण्यम् । २ वृक्षाणामिव । ३ मनोरथः । ४ फलवान् । ५ हस्तिना । ६ नौका । ७ नूतनमेघः । ८ वायुना । ९ शालिवनम् । १० याचकाः । ११ अर्थैः ।

[ ३६ ]

## वृषभस्वामिनिर्वाणकल्याणे भरतस्य परिदेवनम्।

अस्तोकशोकसङ्घ्नो, भरतो मूर्च्छयाऽपतत् ।
दुःखच्छेदि तदाऽज्ञासीन् न कोऽपि रुदितं यत ॥२१४॥

चक्रिणं ज्ञापयन् दुःखवेदभेदनकारि तत् ।
शक्रः सैन्यनन्दन चक्रे, समग्रैस्त्रिदशैः सह ॥ २१५ ॥

रुदितैरदितैस्तेषां, विमूर्च्छश्चक्रवर्त्यपि ।
रुरोद रोदसीक्रोड, पूत्कारैः परिपूरयन् ॥ २१६ ॥

रुदितेन क्षणात् तेन, शोकोऽन्तश्चक्रवर्तिन ।
कुठारस्फारघातेन, दारुवत् प्राप दीर्णताम् ॥ २१७ ॥

दुःखशल्याकुलस्वान्तविशल्यीकारकारणम् ।
तदादि किल लोकेऽपि, शोकेऽभूद् रुदितक्रम ॥ २१८ ॥

विललाप तत क्ष्मापः, सन्त्यज्यैत्यात्मधीरताम् ।
हा तात! हा जगत्त्रातस्त्यक्त्वा मा गतवानसि ॥ २१९ ॥

बाहुबल्यादयस्तेऽपि भ्रातरो मम निर्ममा ।
स्वसारौ ब्राह्मी-सुन्दर्यौ, पुण्डरीकादयोऽङ्गजा ॥ २२० ॥

श्रेयासप्रमुखा पौत्रा, मा मुक्त्वैकाकिनं हहा ।
प्रक्षीणाखिलकर्माणो, निर्वाणपदमाश्रयन् ॥ २२१ ॥

जीवाम्यद्यापि पापोऽ[२], राज्यमोह त्यजामि न ।
त्वद्धर्मदर्शनाशर्म, त्वां विना नाथ! कुत्र मे[३] ॥ २२२ ॥

---

१ यत्नाम् । २ ऽप । ३ पुनः ।

कमलाकरवद् वनाश्रयो, हिमसन्दोहमयानिलोर्मिभि ।
रजनीपु स हैमनीपु ही, क्रममेत्यावरणेन वर्जित ॥ १२५ ॥
भृशमुष्णऋतौ सुदारुणे, किरणैरुष्णरुचेश्चिर स्थिरे ।
स्नपिताननीरजोऽङ्गज, स सरोवत् परितोऽपि शुष्यति ॥१२६॥
स निरावरणो निराश्रय स्तनयो मे [1]विसहाय एव हा ।
शवरो गिरिंग स्फुरद् यथा, खलु कालेष्वखिलेषु दु खित ॥१२७॥
पृथिवीं परिपालयन्त्यमी, भरतो बाहुबलिः सुता पर ।
न तु कोऽपि करोति सकथमपि सूनोर्मम धिग् विधिक्रम ॥१२८॥
इति सन्ततसस्मृते सुत, पुरत सन्नतनद् विजानती ।
इदमालपति स्म सा भृश, ससुपालम्भनकारिनाम्भरा ॥१२९॥
न कदापि ददासि दर्शन, विराजज्ञाननिधाननानस ! ।
किमु वत्स! न वेत्सि वत्सला, जननीं शोकमनाकुलनिमाम्॥१३०॥
जरतीत्यवधीरणाऽस्ति चेत् मयि पौत्रा प्रतिपौत्रकाम्तत ।
किमु लेखलुरजलिनोऽपि नो, कथमुक्त प्रथयन्ति ते मन ?॥१३१॥
अनुगै रहितोऽसि वत्स, तैरपि कच्चमसुखै क्षितीश्वरै ।
कथमेकक एव कानने, चरसि क्रूरमृगाग्निभैरवे ॥ १३२ ॥
अनुगम्य भवन्तमात्मज, स्वमवश्य वरिवम्यथाम्यहम् ।
तव दुःखरोदनाश्रुभि, किमु कुर्वे बत लुप्तलोचना ? १३३ ॥
भवति त्वयि राज्यमुज्ज्वल, सुखमुन्मेषनिमेष यन्मयि ।
अधुना विपिन श्रयत्यऽभूदसुख कोटिगुण तत सुत ! ॥१३४॥

१ माना । २ सहायरहित । ३ अग्रत स्थितमिव । ४ अस्मान ५ अवगतमुरन्दन । ६ सर्वा करामि । ७ प्रादुर्भावम् ।

इति सा भृशमार्तिसम्भवाऽसुखसम्भावनयाऽभिभाविता ।
गलदश्रुजलप्लुतांशुका, अलपत् कल्पितमौलिचालना ॥१३५॥

—पद्मानन्दकाव्यम् स० १४

---

## [३९]
# गुरोः स्वर्गलोकगमने विजयसेनसूरेर्विलापः ।

श्रुत्वा तद्वचनं हत इवाभवद्बाष्पपूर्णनयनयुगः ।
एष पुनर्दुःखादिदमजीगदद्गद्गदस्वनितः ॥ २०२ ॥

उच्छिन्नः सुरभूरुहोऽप्यपगता स्वर्धामधेनुः पुन-
र्भग्नः कामघटो मणिः सुमनसां चूर्णीबभूव क्षणात् ।
दग्धा चित्रलता गतः शकलतां हा दक्षिणावर्तभृ-
त्कम्बुः स्वर्गिगृहं गते त्वयि गुरौ श्रीहीरसूरीश्वरः(र!)॥२०३॥

हा हा भूघनबोधनैकविबुध ! श्रीसूरिचूडामणे !
हा सिद्धान्तसमुद्रमन्दरगिरे ! हा शासनाहर्मणे ! ।
हा हा मौक्तिकदानसुन्दरगुरो ! वैराग्यवारांनिधे !
हा कारुण्यनिधे ! निदर्शनतया त्वं कुत्र यातः प्रभो !' ॥२०४॥

अद्यास्ते गतधामसहस्रकिरणश्चन्द्रोऽपि तन्द्रां गतः
शुष्कः क्षीरनिधिर्विधेर्निमितैर्मेरुर्विलीनः पुनः ।

---

१ पुष्कलमतिविचारणाय । २ वदति स्म । ३ कल्पवृक्षः । ४ कामधेनुः । ५ शङ्खः । ६ (अकबर) सम्राड्बोधनदक्षैकविद्वन् । ७ सूर्य । ८ मुक्ति-सुखानि याचयति । ९ मन्दर । १० निद्राम् ।

कथं मयैकेन च दक्षिणेन धरिष्यते सा ननु तैर्णकेन[1] ॥ ५८ ॥
अचिंतयित्वेति मैंदाकृतिं द्राक् त्वमप्सर केलिरसानसेनी ।
न चेद् भवादृग्हितकारिपित्रा विमुच्यते किं पृथुको लघीयान्[2] ॥ ५९ ॥
अकब्बरोऽयं नरराजरत्नं भवांश्च सर्वार्थिजनावतंस ।
मिथश्च योऽभूद् युवयोर्नियंग सुवर्णमण्योरिव वर्णनीय ॥ ६० ॥
सँ जातवान् दत्तसमस्तसम्पद् नृणा कृषीणामिव वारिवाह ।
प्रकाशभाग् भानुमतेव लोको मह्म्विना तेन बभूव सर्व ॥ ६१ ॥
मरुष्विवार्मर्त्यमहीरुह सँ जनेषु चासीत् सततं हिताय ।
कदाऽथ भावी सुरसद्म प्रजाना पयोरुहां पूष्ण इवोदय स[?] ॥ ६२ ॥
शशीव पक्षेण सितेतरेण कलाकलाप क्रमतो भवेह ।
सँ नाशितस्त्वा हरता विधात्रा जगत्पयोराशिविलासमूलम् ॥ ६३ ॥
विवाहिता श्रीमदकब्बराय वराय तात ! त्वयका द्विजेन ।
कृपाकनी रूपबलर्द्धिबीज तथा यथार्थाद्भुतमंत्रभाजा ॥ ६४ ॥
यथा युतौ नित्यमिमावभूता सुदम्पती भावरसान् प्रपन्नौ ।
विनाऽस्मि न त्वा स परत्र मंत्र स्मरन्नदुस्तापमुपैम्यह हो[1] ॥ ६५ ॥
—युग्मम्

अकब्बरो बब्बरवंशजन्मा त्वैंथीद्धबुद्धिर्भृशमस्ति भूप ।
सुभक्तिभाजस्त्वयि येऽसुभाज स तानसून् स्वानिव पाति नित्यम् ॥ ६६ ॥

१ वत्सकेन । २ लघीयस्वरूपाम् । ३ बाल- । ४ युवयोः सङ्ग ।
५ सङ्गेन । ६ सुरतरु । ७ सङ्ग । ८ रवे । ९ युवयो सङ्ग ।
१० दीनमति° ११ प्राणिन ।

## [ ४२ ]

## श्रीमहावीरप्रभुनिर्वाणे गौतमस्य विलापः ।

प्रसरति मिथ्यात्वतमो, गर्जन्ति कुतीर्थिकौशिका अद्य ।
दुर्भिक्षडमरवैरादि–राक्षसा प्रसरमेष्यन्ति ॥ १ ॥
राहुग्रस्तनिशाकर मिव गगनं दीपहीनमिव भवनम् ।
भरतमिद गतशोभ, त्वया विनाऽद्य प्रभो ! जज्ञे ॥ २ ॥
कस्याङ्घ्रिपीठे प्रणत पदार्थान्, पुन पुन प्रश्नपदीकरोमि ?
क वा भदन्तेति वदामि ? को वा, मा गौतमेत्याप्तगिराऽथ वक्ता ? ॥३॥

हा ! हा ! हा ! वीर ! किं कृत ? यदीदृशेऽवसरेऽह दूरीकृत, किं माऽऽक मण्डयित्वा बालवत्त्वाञ्चलेऽलगिष्य ? किं केवलभागममार्गयिष्य ? किं मुक्तौ सङ्कीर्ण अभविष्यत् ? किं वा तव भारोऽभविष्यत ? यदेव मा विमुच्य गत, एव च 'वीर ! वीर !' इति कुर्वतो वीइति मुखे लग्न गौतमस्य,

—कल्पसूत्रसुबोधिकावृत्तौ पृ० १२७

---

१ उल्का ; २ अवस्कन्द ।

आत्त दत्त्वापि च मे लोचनयुगल कलङ्कविकलमलम् ।
दत्त्वा पुनरद्दालितमधमेनाऽनेन निविरलम् ॥ ५ ॥
आरोप्य मेरुशिखरं, प्रपातिता पापिनाऽमुनाऽह्मियम् ।
परिवेष्याऽप्यन्नऽऽहृष्ट, भोजनभाजनमल्ज्जन ॥ ६ ॥
यद्वा मयाऽपराद्ध भवान्तरऽस्मिन् भवेऽपि किं? धात ।
यस्मादेव पुर्नेन्दुचिताऽनुचित न चिन्तयसि? ॥ ७ ॥
अथ किं कुर्वे? क च व, गच्छामि? वदामि कस्य वा पुरत?।
दुर्दैवेन च दग्धा, मुग्धा जंगाऽधमेन पुन ॥ ८ ॥
किं राज्येनाऽप्यमुना? किं वा त्रिदिवसुखैर्निदयनत्यैः?।
किं वा दुकूलशय्याशयनोद्भवशर्मसंस्पर्शेण? ॥ ९ ॥
गजवृषभादिस्वप्नै, सूचितमुचित शुचि त्रिजगदर्च्यम् ।
त्रिभुवनजनासपत्न, विना जनानन्दिसुतरत्नम् ॥ १० ॥ युग्मम् ॥
धिक् ससारमसार, धिगुदु सव्याप्तविषयसुखलेशान् ।
मधुलिप्तखड्गधारा—लेहनतुलितानहो लुलितान् ॥ ११ ॥
यद्वा मयका किंचित्तथाविध दुष्कृत कृत कर्म ।
पूर्वभवे यदपिभि, प्रोक्तमिद धर्मशास्त्रेषु ॥ १२ ॥
पसुपक्खिमाणुसाण, बाले जोऽवि हु विओअए पावो ।
सो अणवच्चो जायइ, अह जायइ तो विवज्जिज्जा ॥ १३ ॥

---

१ भक्षिता । २ पशुपक्षिमानुषाणां बालान् योऽपि च वियोजयति पाप ।
साऽनपत्यो जायते अथ जायते ततो विपद्येत ॥

तन् पत्रुका मया किं, त्यक्ता वा त्यजिता अथन्तुद्धया ? ।
रघुरत्साना माना, सम नियोग कृत कि वा ? ॥ १४ ॥
तेषा दुग्धापागोऽकारि मया कारितोऽथवा लोके ।
किं वा सबालकोन्दुरु-बिलानि परिपूरितानि जले ? ॥ १५ ॥
किं वा साण्डशिशून्यपि खगनीडानि प्रपातितानि भुवि ।
पिकशुकशुकुर्कुटकादेर्नीलवियोगोऽथवा विहित ॥ १६ ॥
किं वा बालकहत्याऽकारि सपत्नीसुताद्युपरि दुष्टम् ।
चिन्तितमचिन्त्यमपि वा कृतानि किं कार्मणादीनि ? ॥१७॥
किं वा गर्भस्तम्भनगालनपातनमुख मया चक्रे ? ।
तन्मन्त्रभेषजान्यपि, किं वा मयका प्रयुक्तानि ? ॥१८॥
अथवा भवान्तरे किं ? मया कृत शीलखण्डन बहुश ।
यदिद दु ख तस्माद्विना न सभवति जीवानाम् ॥ १९ ॥

यत —

कुंरडरडत्तणदुब्भग्गाइ, वञ्झत्तनिंदूविसकन्नगाइ ।
लैंट्ति जम्मतरभग्गसीला, नाऊण कुज्जा दढसीलभाव ॥२०॥
एव चिंताऽऽक्रांता, ध्यायन्ती म्लानकमलसमवदना ।
दृष्टा शिष्टेन सखी जनेन, तत्कारण पृष्टा ॥ २१ ॥
प्रोवाच साश्रुलोचनरचना नि श्वासकलितवचनन ।
किं मन्दभागधेया, वदामि ? यज्जीवित मेऽगात् ॥ २२ ॥

---

१ कुरण्डत्वरण्डत्वदुर्भगत्वानि वन्ध्यात्वनिंदु (मृतापत्यम्) विषकन्यत्वादि। लभन्ते जन्मान्तरभग्नशीला ज्ञात्वा कुर्यात् दृढशीलभाव ॥
२ जम्मंतरे खडिअसीलभावा इति तृतीयपादपाठ पुस्तकान्तरे।

सख्यो जगुरथ रे सखि !, शान्तममङ्गलमशेषमन्यदिह ।
गर्भस्य तेऽस्ति कुशलं, नवेति वद कोविदे ! सत्यम् ॥ २३ ॥
सा प्रोचे गर्भस्य च, कुशले किमकुशलमस्ति मे सख्यः ! ।
इत्याद्युक्त्वा मूर्च्छामापन्ना पतति भूपीठे ॥ २४ ॥
शीतलवातप्रभृतिभिरुपचारैर्बहुतरैः सखीभीः सा ।
संप्रापितचैतन्योत्तिष्ठति विलपति च पुनरेवम् ॥ २५ ॥
[1]गुरुए अणोरपारे रयणनिहाणे अ सायरे पत्तो ।
छिद्दघडो न भरिज्जइ, ता किं दोसो जलनिहिस्स ? ॥ २६ ॥
[2]पत्ते वसन्तमासे, रिद्धिं पावंति सयलवणराई ।
जं न करीरे पत्तं, ता किं दोसो वसंतस्स ? ॥ २७ ॥
[3]उत्तुंगो सरलतरु, बहुफलभारेण नमिअसव्वंगो ।
कुज्जो फलं न पावइ, ता किं दोसो तरुवरस्स ? ॥ २८ ॥
समीहितं यत्र भजामहे वयं, प्रभो ! न दोषस्तव कर्मणो मम ।
दिवाऽप्युलूको यदि नावलोकते, तदा स दोष कथमंशुमालिनः ?
॥ २९ ॥

---

१ गुरुकेऽनर्वाक्पारे रत्ननिधाने च सागरे प्राप्तः ।
छिद्रघटो न भ्रियते तर्हि किं दोषो जलनिधेः ? ॥

२ प्राप्ते वसन्तमासे ऋद्धिं प्राप्नोति सकलवनराजी ।
यत्र करीरे पत्रं तर्हि किं दोषो वसन्तस्य ? ॥

३ उत्तुङ्गः सरलतरुर्बहुफलभारेण नतसर्वाङ्गः ।
कुब्जः फलं न प्राप्नोति तर्हि किं दोषस्तरुवरस्य ? ॥

अथ मे मरणं शरणं, किं कार्यं चिरञ्जीवितव्येन ? ।
तत् श्रुत्वेति व्यलपत्, सम्राज्ञि सकलपरिवारः ॥ ३० ॥
हा ! किमुपस्थितमेतत्, निष्कारणवैरिविधिनियोगेन ।
हा ! कुलदेव्य क्व गता ? यदुदासीना स्थिता यूयम् ॥ ३१ ॥
अथ तत्र प्रत्यूहे, विघ्नशमं प्रार्थयन्ति कुलवृद्धाः ।
शान्तिकपौष्टिकमन्त्रौ पयानितानीति कृत्यानि ॥ ३२ ॥
पृच्छन्ति च दैवज्ञान्, निर्धारयन्त्यपि च नाटकादीनि ।
अतिगाढशब्दविरचितगननानि निवारयन्त्यपि च ॥ ३३ ॥
राजाऽपि शोककलितः, शोकाकुलितोऽनतिशं शिष्यति ।
किं कर्त्तव्यविमूढा, सञ्जाता मन्त्रिणः सर्वे ॥ २४ ॥

—कल्पसूत्रसुबोधिकावृत्तौ पृ० ८२–८४

---

[ ४४ ]

## श्रीरत्नाकरसूरेर्वैराग्यगर्भिताऽनुशयपञ्चविंशतिका।

श्रेयः श्रियां मङ्गलकेलिसद्म !, नरेन्द्रदेवेन्द्रनताङ्घ्रिपद्म ! ।
सर्वज्ञ ! सर्वातिशयप्रधान !, चिरं जय ज्ञानकलानिधान ! ॥ १ ॥
जगत्त्रयाधार ! कृपावतार !, दुर्वारसंसारविकारवैद्य ! ।
श्रीवीतराग ! त्वयि मुग्धभावाद्विज्ञ ! प्रभो ! विज्ञपयामि किंचित् ॥२॥
किं बाललीलाकलितो न बालः, पित्रोः पुरो जल्पति निर्विकल्पः ?।
तथा यथार्थं कथयामि नाथ !, निजाशयं सानुशयस्तवाग्रे ॥ ३ ॥
दत्तं न दानं परिशीलितं च, न शालि शीलं न तपोऽभितप्तम् ।
शुभो न भावोऽप्यभवद्भवेऽस्मिन्, विभो ! मया भ्रान्तमहो मुधैव ॥४॥
दग्धोऽग्निना क्रोधमयेन दष्टो, दुष्टेन लोभाख्यमहोरगेण ।
ग्रस्तोऽभिमानाजगरेण मायाजालेन बद्धोऽस्मि कथं भजे त्वाम् ॥५॥
कृतं मयाऽमुत्र हितं न चेह लोकेऽपि लोकेश ! सुखं न मेऽभूत् ।
अस्मादृशां केवलमेव जन्म, जिनेश ! जज्ञे भवपूरणाय ॥ ६ ॥
मन्ये मनो यन्न मनोज्ञवृत्तं त्वदास्यपीयूषमयूखलाभात् ।
द्रुतं महानन्दरसं कठोरमस्मादृशां देव ! तदश्मतोऽपि ॥ ७ ॥
त्वत्तः सुदुष्प्राप्यमिदं मयाप्तं रत्नत्रयं भूरिभवभ्रमेण ।
प्रमादनिद्रावशतो गतं तत्, कस्याग्रतो नायक ! पूत्करोमि ॥ ८ ॥
वैराग्यरंगः परवंचनाय, धर्मोपदेशो जनरंजनाय ।
वादाय विद्याऽध्ययनं च मेऽभूत्, कियद् ब्रुवे हास्यकरं स्वमीश ! ॥९॥

१ स्वाभिप्रायम्। २ पश्चात्तापसहितः। ३ मनोहरम्। ४ महासर्पेण।

परापवादेन मुखं सदोषं, नेत्रं परस्त्रीजनवीक्षणेन ।
चेतः परापायविचिन्तनेन, कृतं भविष्यामि कथं विभोऽहम् ॥ १० ॥
विडम्बितं यत्स्मरघस्मरार्ति–दशावशात्स्वं, विषयान्धलेन ।
प्रकाशितं तद्भवतो ह्रियैव, सर्वज्ञ ! सर्वं स्वयमेव वेत्सि ॥ ११ ॥
ध्वस्तोऽन्यमन्त्रैः परमेष्ठिमन्त्रः कुशास्त्रवाक्यैर्निहतागमोक्तिः ।
कर्तुं वृथा कर्म कुदेवसङ्गादवाञ्छि हि नाथ ! मतिभ्रमो मे ॥१२॥
विमुच्य दृग्लक्ष्यगतं भवन्तं, ध्याता मया मूढधिया हृदन्तः ।
कटाक्षवक्षोजगभीरनाभिकटीतटीयाः सुदृशां विलासाः ॥ १३ ॥
लोलेक्षणावक्त्रनिरीक्षणेन, यो मानसे रागलवो विलग्नः ।
न शुद्धसिद्धान्तपयोधिमध्ये, धौतोऽप्यगात्तारक ! कारणं किम् ॥१४॥
अङ्गं न चङ्गं न गणो गुणानां, न निर्मलः कोऽपि कलाविलासः ।
स्फुरत्प्रभा न प्रभुता च काऽपि, तथाऽप्यहङ्कारकदर्थितोऽहम् ॥१५॥
आयुर्गलत्याशु न पापबुद्धिर्गतं वयो नो विषयाभिलाषः ।
यत्नश्च भैषज्यविधौ न धर्मे, स्वामिन्महामोहविडम्बना मे ॥१६॥
नाऽऽत्मा न पुण्यं न भवो न पापं, मया विटानां कटुगीरपीयम् ।
अधारि कर्णे त्वयि केवलार्के, परिस्फुटे सत्यपि देव ! धिग् माम् ॥१७॥
न देवपूजा न च पात्रपूजा न श्राद्धधर्मश्च न साधुधर्मः ।
लब्ध्वाऽपि मानुष्यमिदं समस्तं, कृतं मयाऽरण्यविलापतुल्यम् ॥१८॥
चक्रे मयाऽसत्स्वपि कामधेनुकल्पद्रुचिन्तामणिषु स्पृहार्तिः ।
न जैनधर्मे स्फुटशर्मदेऽपि, जिनेश ! मे पश्य विमूढभावम् ॥१९॥

१ अनर्थस्य । २ निजस्वरूपम् ।

सद्भोगलीला न च [1]रोगकीला, धनागमो नो [2]निधनागमश्च ।
दारा न कारा [3]नरकस्य चित्ते, व्यचिन्ति नित्यं मयकाऽधमेन ॥२०॥
स्थितं न साधोर्हृदि साधुवृत्तात्, परोपकारान्न यशोऽर्जितं च ।
कृतं न तीर्थोद्धरणादिकृत्यं, मया मुधा हारितमेव जन्म ॥ २१ ॥
वैराग्यरङ्गो न गुरूदितेषु, न दुर्जनानां वचनेषु शान्तिः ।
नाऽध्यात्मलेशो मम कोऽपि देव! तार्यः कथङ्कारमयं भवाब्धिः ॥२२॥
पूर्वे भवेऽकारि मया न पुण्यमागामिजन्मन्यपि नो करिष्ये ।
यदीदृशोऽहं मम तेन नष्टा, भूतोद्भवद्भाविभवत्रयीश ! ॥ २३ ॥
किं वा मुधाऽहं बहुधा [4]सुधाभुक्पूज्य ! त्वदग्रे चरितं स्वकीयं ।
जल्पामि यस्मात् त्रिजगत्स्वरूपनिरूपकस्त्वं कियदेतदत्र ॥ २४ ॥
दीनोद्धारधुरंधरस्त्वदपरो, नास्ते मदन्यः कृपा–
पात्रं [5]नात्रजने जिनेश्वर ! तथाप्येतां न याचे श्रियम् ।
किं त्वर्हन्निदमेव केवलमहो सद्बोधिरत्नं शिवं,
श्रीरत्नाकर ! मंगलैकनिलय ! श्रेयस्कर प्रार्थये ॥ २५ ॥

—श्रीरत्नाकरपञ्चविंशतिका

इतिश्री करुणरसकदम्बके संस्कृत
प्रथमखण्ड. समाप्त. ।

१ रोगा एव कीलका । २ मृत्यो. । ३ कारागाराणि । ४ देवा. । ५ इह लोके । ६ द्रव्यसम्पदम् ।